आप्यायस्वेति सोमोऽत्र दैवतं गोतमो मुनिः। गायत्रीच्छन्द उद्दिष्टं विनियोगो यथोदितम्॥ अग्निर्मूर्द्धेति मन्त्रोऽत्र दैवतं भौममुच्यते। विरूपाक्षो मुनिर्धीमान् छन्दो गायत्र्य मिष्यते॥ उद्बुध्यस्वेति मन्त्रस्य बुधश्चैव तु दैवतम्। मुनिर्बुधश्च मन्तव्य स्त्रिष्टुप् छन्दः प्रकीर्तितम्॥ शुक्रत्वमिति हीत्यत्र शुक्र इत्यधिदैवतम्। शुक्रस्यापि तथार्षञ्च विराट् छन्दः प्रकीर्तितम्॥ शन्नो देवीतिचेत्यत्र शनि दैवत मुच्यते। सिन्धुर्नाम मुनिर्विद्वान् छन्दो गायत्र्य मुच्यते॥ काण्डात्काण्डादिभिर्मन्त्रस्य राहुदैवत मुच्यते। ऋषिः प्रजापतिः प्रोक्तोऽनुष्टुप् छन्दः प्रकीर्तितम्॥ केतुं कृण्वनिति प्रोक्तं दैवतं केतुरेव हि। मधुच्छन्दस आर्षञ्च गायत्र्यं छन्द एव हि॥ स्योना पृथिवीत्य त्र स्कन्दस्य देवता स्मृता। इन्द्रकुत्सेति दैवत्य मिन्द्र एव स्मृतो बुधैः॥ आर्षन्तत्स्यस्य चाप्यत्र त्रिष्टुप् छन्दः प्रकीर्तितम्। यस्मिन्वृक्षेति ह्येत्यत्र यमोवै देवता परा॥ ऋषिस्तु कुष्मलो नाम च्छन्दोऽनुष्टुप् स्मरेद्बुधः। ब्रह्मजज्ञमित्यत्र च कालो दैवतकं महत्॥ मुनिर्यमानतुर्नाम त्रिष्टुप् छन्दो विधीयते। आयाते मेतिच ह्यस्या त्रि ग्रंगुसस्तु दैवतम्॥ आर्षन्तु वामदेवस्य त्रिष्टुप् छन्दो ह्यथो बुधैः। अग्निं दूतमितिह्य स्यादग्निर्वै देवतास्मृता॥ आर्षं मेधातिथेरत्र च्छन्दो गायत्र्यमेव हि। अस्वस्तु सोम इत्यत्र सोमं वैदैवतं स्मरेत्॥ मेधातिथिरिहाप्यर्कोऽनुष्टुप् छन्दश्च उच्यते। भूतिपृथिव्यन्तरिक्ष मित्यत्र दैवतं क्षितिः॥ ऋषिःशातातपःश्रुत्वा छन्दश्चानुष्टुबुच्यते। पुरुषसूक्तस्य दैवत्यं पुरुषेन हितंबुधैः॥ आर्षं नारायणस्येह छन्दस्यानुष्टुबित्यपि। इन्द्रोपेन्द्रो मरुत्वन्तो मरुत्वान्दैवतं महत्॥ आर्षन्तु काश्यपस्येह गायत्र्यछन्दएव हि। मरुत्वनित्यत्रबुधैः सुरेन्द्रो देवता मता॥ अत्रापि कश्यपस्यार्षं गायत्र्य छन्द एव हि। उत्तानपर्ण मित्यत्र इन्द्रो दैवत मुच्यते॥ आर्षं साङ्ख्यस्य

चैवोक्तम् अनुष्टुप्छन्द इत्यपि। प्रजापते इति ह्यत्र देवताच प्रजापतिः॥ हिरण्यगर्भस्यार्षन्तु त्रिष्टुप्छन्दो मतं बुधैः। आयं गौरिति ह्यत्र देवता पूजने मता॥ सर्पराजमुनिर्ह्यत्र गायत्र्यं छन्द इष्यते। एष ब्रह्मा ऋत्विज इति ब्रह्मद्विशोऽधिदैवतम्॥ ऋषिर्वे वामदेवोत्र गायत्र्यछन्द इष्यते। आतृण्वन् इन्द्रदद्रत् सुरेन्द्रं शर्मणेश्वरः॥ वामदेवोह्यस्य आर्षं गायत्र्यछन्द इत्यपि। जातवेदस इत्यत्र जातवेदास्तु दैवतम्॥ कश्यपस्यार्षमत्रापि च्छन्दोऽनुष्टुप्प्रकीर्त्तितम्। आनोनियुद्भिरित्यस्मिन् वायुर्देवतमुच्यते॥ आर्षञ्चात्र वसिष्ठस्य अनुष्टुप्छन्द एव हि। नमः प्रकाशदैवत्यं मुनिःप्रोक्तं प्रजापतिः॥ गायत्र्यं छन्दसाम्वरं विनियोगो यथोचितम्। ईषोउपेति चात्यत्र अश्विनौ दैवते स्मरेत्॥ प्रस्कण्वस्यार्षमत्रापि गायत्र्यच्छन्द उत्तमम्। मरुतो यस्य हिष्यस्य मरुद्दैवत मुच्यते॥ गौतमश्च मुनिर्विद्वन्! च्छन्दसः प्रथमं मुने!। दैवत्य मार्षं सच्छन्दसां यो मत्वाद्विजाग्र्यः कुरुते विधानम्। वेदोक्तमर्थं भवति स्म सर्वं सम्यक्फलं कर्त्तुमिहाप्यमुत्र॥ यो लक्षहोमं ह्यथवा कोटिहोमं राजा विदध्यात्प्रतिवर्षमेकम्। राष्ट्रे सुवृष्टिर्विजयः सुभिक्षम् आरोग्यता स्यात् सुकृतस्य वृद्धिः॥ भवन्ति पुत्राः शुभसन्ततिक्षमाश्चिरायुषो राजहिता धरित्र्याम्। सुकीर्तिमन्तो जयिनोऽपि राज्ये प्रतापवन्तो रविचन्द्रतुल्याः॥ ॥ इति श्रीबृहत्पाराशरीये शान्तिविधिर्नाम नवमोऽध्यायः॥

अथातो नृपतेर्धर्मं वक्ष्यामि हितकाम्यया। पराशरोदितं विप्र! वक्ष्यमाणं निबोधत॥ भूभृत् प्रभा परो देवपूज्योऽसौ परदेवकः। स विधाता च सर्वस्य रक्षिता शासितापि च॥ इन्द्रादियमवित्तेशवारीशमातरिश्वनः। शीतांशुस्तीव्रभासश्च ब्रह्मादयो द्विजो नृपः॥ नृपो वेधा नृपः शम्भुः नृपोऽर्को विश्रवाः। दाना

हर्ता नृपः कर्ता नृणां कर्मानुसारतः॥ नापृच्छे द्यदि राजानं दण्डं नाप्स्याचरिष्यतः। नामास्या स्तमेष्यतिच नाभविष्यज् जगत्-स्थितिः॥ नाग्रहिष्यन् पुरोडाशान्मनुष्यपितृदेवताः। नाभविष्यन् श्वकाकानां भागधेयं हुतं हविः॥ विगुणोऽपि यथा पूज्यः स्त्रियाश्च सत्पतिर्भवेत्। तथा राजा प्रजानान्तु पूज्यः स्याद्विगुणोऽपि सन्॥ स्वधर्मस्थान् नृपो लोका नन्यान् पुत्रानिवौरसान्। शास्य धर्मविदोदण्ड मधर्मकारिणश्च तान्॥ दण्डधृतो नरान् कुर्य्याद्धर्मज्ञानार्थसाधकान्। समर्थानश्वपत्त्यादौ शूरान् स्वामिहितोद्यतान्॥ शुचीन् प्रज्ञांश्च धर्मज्ञान् विप्रान् मुद्राकरान्वितान्। लेखकानपि कायस्थान् लेख्यकृत्तु हितैषिणः॥ अमात्यान्मन्त्रिणो दूतान्यथोदितपुरोहितान्। प्राड्विवाकं समस्तान्वा हितांश्च रक्षकानपि॥ शूरानथ शुचीन् प्रज्ञान् परिविश्वासकारिणः। सर्वस्थानेषु चाध्यक्षं सत्कृत्य वेदिनोऽपरे॥ मदायत्तं कुमाराणामन्तः पूरुषलक्षणम्। वृद्धानशुचिनो विप्रां श्शुचीनधान्य भीरुकान्। यथोदितानि दुर्गाणि कुर्य्युस्ते परिरक्षणम्॥ उद्वाह मुदितं स्त्रीणां यौवने वन्धुकारणात्। पुरस्कृत्य च विज्ञान मात्मरक्षा च यत्नतः॥ प्रातःसन्ध्यार्चना दूर्ध्वं गुडं पुंसवनं स्मृतम्। यथोक्तकार्य्ये शाठ्ये च नित्यं कुर्य्यात् परीक्षणम्॥ कोशे भाण्डरथादीनां हेतीनां चर्मणामपि। कुर्य्याच्च दर्शनं नित्य मतन्द्रितो महीपतिः॥ अमात्यमन्त्रयोक्तृणां सन्मन्त्रं नित्यशोऽपि च। वेदार्थञ्च सदा होमशान्तिञ्च वृद्धसेवनम्॥ यज्ञंदानं तथोत्पातं समये शान्तयोऽपि च। वर्जनं विषयासक्तो भूमिदानस्य शासनम्॥ अक्षिपर्जितदेशे तु नीतिज्ञो मन्त्रकृद्भवेत्। नित्यमुत्साहयुक्तः स्याद् विजिगीषु रुदायुधः॥ सदालङ्कारयुक्तश्च सदैव प्रियवाक्नयः। सदाप्रियहिते युक्तः पूज्यो नार्कोऽप्यसौ नृपः॥ सदा साधुषु सन्मानं विपरीतेषु घा

ननम्। दण्डं दण्ड्येषु कुर्वाणो राजेष्टिफलमश्नुते॥ वृद्धान् साधून् द्विजान् मौलान् यो न सन्मानयेन्नृपः। पिण्डं कुर्वंति नामीषां भूभृत् क्षिप्रं क्षयं व्रजेत्॥ यस्तु सन्मानयेदेतान् नित्यं विप्रांश्च पूजयेत्। पराजयेत सोऽरातीनजेयोह्यपि जायते॥ पीड्यमानाः प्रजा रक्षेत् कायस्थैश्चोरतस्करैः। धान्येक्षुतृणतोयैश्च सम्पन्नं परमण्डलम्॥ हीनवाहनपुंस्कन्तु मत्वा तत्प्रविशेन्नृपः। मासे सहसि यात्रार्थी कृतपुण्यश्च घोषवान्॥ विधिवद्यानकं कुर्य्यात् सह्याह्वे रक्षयेद्बलम्। यत्राचलसरोरक्षा वृक्षरक्षा तु यत्र तु॥ वासं तत्र विधायैव रात्रौ रक्षेद्बलं स्वकम्। चतुर्दिक्षु च सैन्यस्य शूरान्धनुर्धरान्निशि॥ स्वयं राजा नियुञ्जीत समीक्ष्य भूबलाबलम्॥ राज्यस्य षड्गुणान् मत्वा सन्धिविग्रहयानकान्॥ आसनं संश्रयं द्वैधं सम्यक् ज्ञात्वा समाचरेत्। निर्भेदं स्वबलं कुर्यात् हन्याच्च भिन्नचेतसा॥ दासीकर्मकरान् दासान् भिद्यन्ते न क्षयेन्नृपः। निकटस्थायिनो नित्यं जानन्ति चेष्टितं प्रभोः॥ तस्मात्ते यत्नतो रक्ष्या भेदमूलं यतस्त्वमी। ये ते परस्य यत्नेन भेदनीयास्ततोऽपरे॥ यथा परो न जानाति तथा भेदं समाचरेत्। परमात्मविधानां व्यलीकहृतशब्दितम्॥ उत्थापयेत् स्वसेनायाः स्याद्यतश्चित्तभेदिनः। परसैन्ये बहून् पातान् विविधान् कुहकानपि॥ करीणाङ्कुरदानादि वह्निपातननेकशः। स्वसैन्येऽभवदित्यादि नृपो यत्नेन रक्षयेत्॥ नियुज्य यज्ञपुरुषान् नक्तं सर्वं निशामयेत्॥ अन्तर्भीरून् बहिःशूरान् साग्निकान् ब्राह्मणोत्तमान्। धर्मज्ञान् कुलसम्भूतान् विदध्यादात्मसन्निधौ॥ प्रविशेत्परदेशं तु प्रजां स्वीकृत्य संविशेत्। उत्सार्य्य मार्गतो दूरीकृत्यापि मार्गतो व्रजेत्॥ शस्यानि दाहयेत्सर्वं सयवानि धनानि च। भिन्द्यात्सर्वं निपानानि प्राकारं परिखां तथा॥ अपमृत्यम्प्रपादाय भूमिसाधा-

रणं पुनः। गमयेद्वार्षिकान् मासानसौ च वसुधानृपः॥ न युद्धमा श्रयेत् प्राज्ञो न कुर्य्यात् स्वबलक्षयम्। न प्रभेदेन दानेन त्रिभिरे वं वशं नयेत्॥ वदन्ति सर्वे नीतिज्ञा दण्डस्यागतिका गतीः। तद्वर्जं व शमायाति यथा रिपुस्तथा श्रयेत्॥ आक्रान्ता दर्भसूच्योऽपि विघ्नु दृगृध्रोपपातनम्। न नापित युक्तेच युद्धसिद्धौ रसिद्धवत्॥ स्व स्थस्यात्यधिके देशे युद्धमिच्छेत् स्वधर्मवित्। ततः प्रविश्य तद्दूरं भूमियुद्धं समारभेत्॥ किञ्चित् सुप्तेषु लोकेषु क्षपायां युद्धमुत्सृ जेत्। सन्नीरवासतो वापि पीडयेत्परसैन्यकम्॥ व्यूहैर्व्यूहयथो क्तैर्वा रक्षां कृत्वापि चात्मनः। सैन्यकांस्तान् समस्तांश्च नृपो यु- द्धाय प्रेषयेत्॥ समानयेत्समस्तांश्च यो वसेदायतौ नृपः। अन्वि च्छन् जयलक्ष्मीं तु नीतिज्ञः पृथिवीपतिः॥ प्रणयेनापि पत्या च शय्यास्थोऽपि च मानवः। पुष्पैरपि न युद्धेत युद्धं तत्र विपत्तये॥ ही नं परबलं मत्वा निरुत्साहमनादरम्। समस्तबलसंयुक्तः स्वयमु त्थाप्य योधयेत्॥ न हन्यात् मुक्तकेशान्तु नाशयेन्न निरायुधम्। प राङ्मुखस्त्र्च महतं न तवास्मीति वादिनम्॥ अन्यानपि च विद्वां- श्च न हन्यात् धर्मयुद्धकृत्। हन्याच्चेन्नरकं याति भ्रूणहत्यासमेन सा॥ पराङ्मुखीकृते सैन्ये यो युद्धान्न निवर्त्तते। तत्पदानीष्टितु- ल्यानि भूत्यर्थमेकचेतसः॥ शिरोहतस्य ये वक्रे विशन्ति रक्तबिन्द वः। सोमपानेन तत्तुल्या इति वासिष्ठजोऽब्रवीत्॥ युध्यंते भूभृतो येच भूम्यर्थमेकचेतसः। इष्टैस्तैर्बहुभिर्योगैरेवं यान्ति त्रिविष्टप म्॥ येषु एवापरो धर्मो नृपतेर्यद्रणार्जितम्। वित्तन्दीयेत विप्रेभ्या न् प्रजाभ्यश्चाभयं सदा॥ तदा तु वशतां याति स देशो न्यायतोऽर्जि तः। तद्देशव्यवहारेण यथावत्परिपालयेत्॥ रणार्जितेन वित्तेन राजा कुर्यान्मखान् द्विजान्। अर्चयेद्विधिवद्विद्वान् सतान् सन्मा नयेदपि॥ मातुलः श्वशुरो बन्धुरन्यो वापिच यो जितः। अदण्ड्यः

कोऽपि नो राजा राजनीतिविदो विदुः॥ सुसहायमन्नपादं शूरं मज्ञा नुरागदम्। सोत्साहं विजिगीषुञ्च भूभृत् क्षिप्रं निवेदयेत्॥ मत्वा चार्थवतः सर्वान् नियुक्तार्थे नियुग् भवेत्। सार्थकांश्चैव युञ्जीत सर्वतोऽर्थमुपार्जयेत्॥ सर्वाण्यपि च वित्तानि यतस्ततोऽपि राजनि नृपस्य यदि जातानि देवद्रव्याणि कोशवत्। आदाय रक्ष्य चास्मान् ततस्तत्र च तत् क्षिपेत्॥ वित्तं वार्द्धुषिकाणान्तु कदर्थस्यापि यद्भवे-त्। पाषण्डिगणिकावित्तं हरन्नातो न किल्बिषी॥ देवब्राह्मणपाष ण्डिगणका गणिकादयः। वणिग्वार्धुषिकाः सर्वे स्वस्थे राजनि सुस्थि ताः॥ सप्तार्चिश्वाश्वगोमांसान् यस्य दहत्यकिल्बिषी। गृह्णीयात् स र्वतो राजा करान् यः पीडयेत् प्रजाः॥ स्तोकं स्तोकन्तु फलकं मांसं भु-ङ्क्ते चिरन्धराम्। सदा चोद्यमिना भाव्यं नृपेण विजिगीषुणा॥ वि जिगीषुनृपो नान्यैः कदाचिदभिभूयते। तदेवं हृदि सन्ध्यायन् निरु त्साहो नृपो भवेत्॥ देवपूरुषसंयोगे सर्वाः सिध्यन्ति सिद्धयः॥ नैके न चक्रेण रथः प्रयाति नचैकपक्षोऽङ्ग! चयाति पक्षी। एवं हि दैवेन च केवलेन पुंसोऽर्थसिद्धिर्न रकारतो वा॥ केचिद्धि दैवस्य तु केवल स्य प्राधान्यमिच्छन्ति विधिप्रवीणम्। पुंस्कारयुक्तस्य नरस्य केचि दप्यत्र इष्टा पुरुषार्थसिद्धिः॥ अत्युद्यमी क्रियतएवच यः श्रमी च-शौर्य्यान्वितश्च गुणवांश्च सुधीश्च विद्वान्। प्राप्नोति नैव विधिना स पराङ्मुखेन स्वीयोदरस्य परिपूरणमन्नमात्रम्॥ शुभ्राणि ह-र्म्याणि वराङ्गनाश्च नानाप्रकारो विभवो नरस्य। उर्वीपतित्वञ्च नृ फारता च सर्वं हि भञ्जु क्षयमेति दैवात्॥ केषां हि पुंसां महतो हि दैवात् स्थानस्थितानामपि चार्थसिद्धिः। एषा प्रभुत्वं बहुजीविना च एको हि दैवो बलवानतोऽत्र॥ पुंस्त्रीप्रयोगादथ शुक्रशोणात् तयोर्हि मध्ये विदधाति गर्भम्। स्त्रीणान्तु तत् विप्र! नचापि पुंसां सर्वाणि चैषां मनुजेश्वरत्वम्॥ कासान्तु गर्भस्य न सम्भवोऽस्ति का

सान्तु शुक्रं नतु वीर्य्यहीनम्। अधत्त गर्भोऽपि जहाति गर्भं काचिच्चगर्भं न बिभर्ति दैवात्॥धाता विधाता निजकर्मयोगाद् विधेस्त्वभीष्टं त्वनुभाव भाव्यम्। दैवं सुराणां सच दैत्यकानां सह्येव कर्त्ता तु मनूद्भवानाम्॥ दैवान्मघोनोपि सहस्रमक्ष्णां दैवाद्धिमांशोः क्षयरोगता च। दैवात्पयोधौ लवणोदकत्वं दैवाद्रवेश्चित्रतरा च गुप्तिः॥यद्यप्यमुष्यं न परोऽस्ति दैवात् कुर्य्यात्तथापीह नरो नृकारम्। उद्दीपयेत्कर्मकरो नृकारादुद्दीपितं श्रीरिव वै तनोति॥ दैवेन केचिच्च हठेन केचित् केचित् नृकारेण नरस्य चार्थाः। सिध्यन्ति यत्नेन विधीयमाना स्तेषां प्रधानं नरकारमाहुः॥स्वामिप्रधानं नयदुर्गकोशान् दण्डञ्च मित्राणि च नीतियज्ञाः। अङ्गानि राज्यस्य वदन्ति सप्त सप्ताङ्गपूर्वो नृपतिर्धराभुक्॥दुर्वृत्तसद्वृत्तनरेषु दण्डं राज्ञा विधेयं निपुणार्थसिद्ध्यै। दण्डञ्च मत्वाऽर्जितवित्तसत्त्वान् हीनार्थ पुंसाश्च दमन्ति हीनम्। अन्यायतो येच जनेजनेश्वराः संपीड्य वित्तानि नयन्ति लोभात्॥ नन्क्रोधवृद्धिपरिदग्धकायाः क्षीणायुषस्ते तु भवन्ति भूपाः। दण्डो महान्मध्यकमन्यथास्तु मानन्तु तस्य त्रसरेणुकादि॥साशीति साहस्तनपामहान्स्यादर्धादिके चैव तदर्धको वा। सर्वार्थपादस्त हरश्च दण्डः पात्यो नृपेणेति वदन्ति सद्यः॥ पाण्यादिपाच्छेदनमारणञ्च निर्वासनं राष्ट्रतएव सद्यः। ज्ञात्वापराधं मनुजस्य यस्तु देशञ्च कालञ्च वयोवपुश्च॥ दण्ड्येषु दण्डं विदधाति भूभृत्साम्यं स बध्नाति पुरन्दरस्य। यः शास्त्रदृष्टेन यथा नरेश्वरो दण्डं विदध्याद्विधिवत्करांश्च॥ स चैव कीर्त्तिर्वितनोति गुर्वीरायुश्च दीर्घं दिवि देवभोगान्। यस्तूत्क्रमार्गाणि कुलानि राजा श्रेणिञ्च जातीश्चरतांश्च लोकान्॥ आनीय मार्गे विदधाति धर्मे नागेशगीर्वाणगणैः प्रशस्यम्। अन्यश्च वह्निर्जलवित्तनाथशीतांशुरूपाणि ह बिभ्रतीह॥ सर्वे च भूयस्त्विह रूपकञ्च तत्तथ्यमानं शृणुत द्विजेन्द्राः॥ यद्दा जिगीषुर्धृतशस्त्रपाणिः स्थियं समालम्ब्य स सिद्ध-

सैन्यः ॥ सर्वान् सपत्नांश्च स हन्तुकामस्तदासहर्यश्व इवावभाति। अकारणात्कारणतोऽपि एष प्रजा हतेयं स समृद्धकीर्तिः ॥ यदा तदैनं नृपतीनि विज्ञास्तनूनपातं प्रवदन्ति भूपम् । धर्मास्तिनस्त्वश्रुतिशास्त्रदृष्टाः शुभाशुभाचारविचारकृत्स्यात् ॥ धर्म्येषु दानं त्वघकृत्सु दण्डं यदाचनीशः सच धर्मराजः । धनप्रदानेन करोति दृष्ट्वा भूभृत्तदासान्द्रविणेशवश्यान् ॥ समस्तशीतांशुगुणप्रयोक्ता यदायदामेष शुभाय शास्येत् । प्रसन्नमूर्तिर्गतमत्सरः सन् तदोच्यते सोम इव क्षितीशः ॥ आज्ञा नृपाणां परमं हि तेजो येषां न मन्ये न सशस्त्रवध्यः । ब्रूयाच्च कुर्याच्च वदेच्च भूभृत्कार्यन्तदेवं भुवि सर्वलोकैः ॥ दुर्धर्षतीव्रांशुसमानदीप्तो ब्रूयान्मनुष्यः परुषं नृपस्य । यस्तस्य तेजोऽध्यवमन्यमानः सद्यःस पञ्चत्व मुपैति पापात् ॥ योऽह्नाय सर्वं विदधाति पश्येत् शृणोति जानाति चकास्ति शास्ति । कस्यापि चाज्ञां न बिभर्ति राज्ञः समस्त देवांशभवोहि यस्मात् ॥ यः स्वधर्मे स्थितो राजा प्रजां धर्मेण पालयन् । सर्वकामसमृद्धात्मा विष्णुलोक मवाप्नुयात् ॥ इति श्रीबृहत्पाराशरीये राजधर्मः सम्पूर्णः ॥

अथ विप्रो वनं गच्छेद्विना वा सह भार्यया । जितेन्द्रियो वसन्नेव नित्यश्रौताग्निकर्मकृत् ॥ वन्यैर्मुन्यशनैर्मेध्यैः श्यामनीवारकङ्गुभिः । कन्दमूलफलैःशाकैःस्नेहैश्च फलसम्भवैः । सायं प्रातश्च जुहुयात् त्रिकालं स्नानमाचरेत् ॥ चर्मचीरवासा वै श्मश्रुलोमजटाधरः । पितॄंश्च तर्पयेन्नित्यं देवांश्चाजस्रमर्चयेत् । अर्चयेदतिथीन् नित्यं भृत्यांश्चापि प्रपोषयेत् ॥ न किञ्चित् प्रतिगृह्णीयात् स्वाध्यायेनेस्थमाचरेत् । सर्वसत्त्वहितोपेतो दान्तश्चाप्यात्मचिन्तकः ॥ सन्न्यस्तश्वान्तको नित्य दानशीलः सदा द्विजः । किञ्चिद्देहं समास्थाप्य सुरत्या वर्तयेत्सदा ॥ एकाह्निकन्तु कुर्वीत मासेकञ्चार्थसञ्चयम् । षाण्मासिकञ्चाब्दिकञ्च यज्ञार्थं च वने वसेत् । त्यक्त्वा तदाश्विने मासिअन्य

स्थानं समाचरेत् ॥ यथावदग्निहोत्रं तु समिद्धाग्नौ च पालयेत्। कृ
च्छ्रैश्चान्द्रपराकाद्यैः पक्षमासोपवासकैः॥ त्रिरात्रैश्चैकरात्रैश्च आ
श्रमस्थः क्षयेद्वपुः। तिष्ठन्नासनिकस्तत्र स्वपेदधस्तथा निशि॥ अ
तन्द्रितो भवेन्नित्यं वासरं भपदैर्नयेत्। योगाभ्यासरतो नित्यं स्था
नासनविहारवान् ॥ वसन्तग्रीष्मवर्षासु जलाग्न्याकाशमाश्रयेत् ॥
दन्तोलूखलिको वापि कालपक्वभुगेव च। स्यादाश्मकुट्टकोविप्रः
फलस्नेहैश्च कर्मकृत् ॥ शत्रौ मित्रे समः स्याच्च तथैव सुखदुःखयोः
समदृष्टिश्च सर्वेषु न विशेद्धनगह्वरम् ॥ म्लेच्छव्याप्तानि सर्वाणि व
नानि हि कलौयुगे। न भूयः शासितारस्तु ग्रामोपान्ते वसेदतः॥ ग्रा
माच्च नगराद्देशात्तथारण्यवनानि च। क्षित्यंशरक्षितान्येव सर्वेषां
फलदानि हि ॥ भूपतेः प्रथमं तत्स्यात् कृत्यं शंसेद् द्विजाग्रतः। यागं
वाऽरण्यवासं वा कुर्यात्तु तदनुज्ञया ॥ सुत्रामानलवायूनां यमस्येन्द्र
विवस्वताम्। यदा वित्तेशयोर्ब्रह्मा मात्राभ्यो निर्ममौ नृपम्॥ पार-
त्रिकन्तु यत्किञ्चित् यत्किञ्चिदैहिकं तथा। नृपाज्ञया द्विजातीनां त
त्सर्वं सिद्ध्यति ध्रुवम् ॥ नृपतेः प्रथमं न स्यात् सर्वे द्विज। मखादिक-
म्। रक्षार्थं कथयित्वा तु यथाकार्य्यं समापयेत् ॥ धेनुपूर्वं वशिष्ठस्य
ह्यसौ दुर्वाससोऽपि च। वनवासाश्रमस्थस्य ह्यग्निकार्याय तांश्रयेत्।
फलस्नेहाय दानस्य कालवैगुण्यतो द्विजः॥ तथा गोदुग्धसर्पिष्य मग्नि
कार्यं समापयेत्। सर्वकालेषु सर्वेषु तथा चैवाश्रमेषु च॥ गोदुग्धादि
पवित्रं स्यात् सर्वकार्येषु सत्तमाः!॥ सर्वकार्येषु सर्वेषु भिक्षां कुर्याद्व
नाश्रमी। तथा सर्वे प्रकुर्वन्ति पितृदेवार्चनादिकम्॥ अष्टौ भुञ्जीत
वा ग्रासान् ग्रामादाहृत्य यत्नवान्। आश्रमः संक्षयं गच्छेदनिलां प्रा
गुदीचिकाम्॥ विप्रो विधाय वनवासविधेयधर्मान् सर्वानिमानुक्त
विधिक्रमेण। संशुद्ध्य पापानि वपुर्विशोध्य ब्रह्माधिगच्छेत् परमं
, द्विजेन्द्रः॥ आश्रमत्रयधर्मांश्चाकृत्य चरित्वा ते द्विजातयः। ह्यपोश्च वा

ततः पश्चाच्चतुर्थाश्रममाचरेत् ॥ द्विजाग्रजो यदा पश्येद्वलिं पलितमात्मनः। उपरतिं तथाक्षाणां क्षीणकामः सवे द्विजः ॥समीक्ष्य पुत्रपौत्रं वा दृष्ट्वा वा दुहितुः सुतम्। अधीत्य विधिवद्वेदान् कृत्वा यागविधानताम् ॥ निश्चयं मनसा कृत्वा चतुर्थाश्रममावसेत्। आज्ञापत्यं विधायेष्टिं वनाद्वासमनोऽपिवा ॥समस्तदक्षिणायुक्तां सर्ववेदास्तथाश्चवान्। अग्निनात्मनि चारोप्य दण्डान्विधिवदाचरेत् ॥ किञ्चिद्बुद्धं समास्थाय तद्धर्मेण च वर्त्तयेत्। वाङ्मनः कायदण्डांश्च तथा सङ्घादयो गुणाः ॥सुमुखो नियतो यस्य स त्रिदण्डीति कथ्यते। कमण्डल्वक्षमाला च भिक्षापात्रमथापरम् ॥काषायवासः कौपीनकार्यार्थे वस्त्रमेव च। शिखायज्ञोपवीतञ्च दण्डानां त्रितयं तथा ॥ द्विकालविधिवत् स्नानं भिक्षया चापि भोजनम्। शुद्धेकवृत्तिर्विप्रेषु सत्कर्म निरतेषु च ॥ भिक्षावर्णो यतेः प्रोक्तो वृत्तवर्जन्तथैव च। असंभाष्यं स्वशून्येच तथा च शिल्पकारुभिः ॥अवकृत्यं तथा स्त्रीभिरेतत्कृत्यं यतेः स्मृतम्। सर्वदा दम्भसंरोधो नित्यमेकान्तशीलता ॥ सदैव प्राणसंरोधः सदैवाध्यात्मचिन्तनम्। मृद्वेणुदार्वलाब्वश्ममयं पात्रं यतेः स्मृतम् ॥ शुचिरम्भस्त्वमीषाञ्च गोवालश्चाघमर्षणम्। न दण्डेनैव दण्डेन विना वातेन वा तथा ॥ मोक्षावाप्ति र्भवेत्पुंसां किन्तु साध्यात्मचिन्तनम्। समत्वं सुखदुःखेषु तथा ये द्वेषरागयोः ॥ आत्मसमानधर्म्मत्व मजस्रं चात्मचिन्तनम्। यतिभिस्त्रिभिरेकत्वं द्वाभ्यां पञ्चभिरेव च ॥ न ख्यातव्यं कदाचित्स्यात् शिष्यन्तो नाशमाप्नुयुः। बहुत्वं यत्र भिक्षाणां वार्तास्तत्र विचित्रकाः ॥ स्नेहपैशुन्य मात्सर्यभिक्षाणां नृपतेरपि। तस्मादेकान्तशीलेन भवितव्यं सदा द्विज। ॥आत्माभ्यासरतो नित्यं ब्रह्मावाप्ति मभीप्सताम्। त्रिदण्डग्रहणादेव प्रेतत्वं नैव जायते ॥अध्यात्मयोगयुक्तस्य ब्रह्मावाप्तिर्भवेद्यतः। यतेन्द्रियोऽपि दण्डार्हो युवा तस्य तथा निरुक्॥ युवा निरु

क्रयाभिक्षुरात्मरक्षसहर्षकः। भिक्षुर्गृहे वसेत्तत्र कामार्थन्योऽभिग च्छति॥ तत्स्थानेन वृथा चैव सह तेनैव नापयेत्। निवसेदेकरात्रञ्च बहिर्यत्र तु वेश्मनि॥ स तारयति रक्षान्वै विंशतिं पितृमातृतः। भिक्षुर्यस्यान्नन्तु ब्रह्म योगाभ्यासरतो भवेत्॥ परिणामश्च योगेन कृ तकृत्यो गृही स तु। निर्ममो निरहङ्कारः सर्वैः सह प्रयच्छति। ब्रह्मण्या त्मनि गोमायो मूत्रे इच्छास दासरक्॥ चिह्नानि धात्रा कथितानि य स्य वर्क्ते सयस्याभिहितेव भिक्षा। यो ध्यानवान् वा सततं जिताक्षः स ब्रह्मकाम्योगमनं करोति॥ वनस्थ भिक्षुधर्मान् वै यानब्रवीत्परा शरः। तथावदभिधायेतान् वक्ष्याम्याश्रमभेदकान्॥ ॥इति श्रीबृ हत्पाराशरीये धर्मशास्त्रे वानप्रस्थयतिधर्मोनाम दशमोऽध्यायः॥

अथातः सम्प्रवक्ष्यामि भेदमाश्रमसम्भवम्। ब्रह्मचर्यादि कानान्तु तथा तथ्यं निबोधत॥ चतुर्णामाश्रमाणां तु भेदो दृष्टो म नीषिभिः। प्रत्येकशो वदाम्येतत् शृणुध्वं द्विजसत्तमाः!॥ ब्रह्मचारी गृहस्थश्च वानप्रस्थस्तथा यती। एतद्भेदं प्रवक्ष्यामि शृणुध्वं पापना शनम्॥ चतुर्धा ब्रह्मचारी च गायत्र्य ब्राह्मकस्तथा। प्राजापत्या बृ हच्चेति लक्षणानि पृथक् पृथक्॥ अक्षारलवणाशित्वा गायत्र्याञ्च स मत्यहम्। वर्तते क्षपया नित्यं गायत्र्यं तत्प्रकीर्तितम्॥ चतुर्धा द्वाद शाब्दानि योऽधीयानश्चतुः श्रुतीः। भिक्षया ब्रह्मचर्येण तेष्वध्या सं तदुच्यते॥ ऋतुकालाभिगामी सन् परस्त्रीपर्ववर्जकः। वेदान ध्येति भिक्षाभुक् प्राजापत्योऽयमुच्यते॥ गुरोर्वा गुरुपुत्रस्य तत्प त्न्या वापि सन्निधौ। यो वसेदात्मसंज्ञानं ब्रह्मचारी स नैष्ठिकः॥ गृहस्थस्य चतुर्भेदो मतः शालीनतीव्रकौ। यायावरास्तथा वान्ये घोरसंन्यासिकास्तथा॥ कृषिगोरक्षवाणिज्यैः सर्चान् कुर्वन् क्रि- यां द्विजः। विहितो ह्यात्मविद्यश्च वार्तावृत्तिः स उच्यते॥ ददात्यध्ये ति यजते याजयेत् चैव पाठयेत्। कुर्यात्कर्म प्रतिग्राही शालीनोऽ

ध्यानकृद्द्विजः॥ उक्तः सन् कारयेदन्यां क्रियां कुर्यात्प्रतिग्रहे। पाठको नियतात्मा च यायावरः स उच्यते॥ तिष्ठेद् यश्च शीलोञ्छाभ्यां मुहूर्ताद्रिश्च वर्तते। आत्मवित्त्व क्रियां कुर्यात् घोरसन्यासिकः स तु ॥वानप्रस्थश्चतुर्भेदो वैखानस उदुम्बरः। वालखिल्यो वनेवासी त लुक्षणमथोच्यते॥ फलैर्मूलैरकृष्यान्नैरग्निकल्पेन वै वसन्। कुर्यात्पञ्च महायज्ञानात्मविद्वैखानसः स तु॥ इमानि तत्फलैः कृष्णाधने धत्तुः उदम्बरे। योगा वसेदतो ज्ञानी पञ्चयज्ञाग्निकर्मकृत्॥ वनस्थो वालखिल्यो यो वसेत् वल्कलचीवरम्। अग्निकार्यकृदात्मज्ञः दुर्जातसेवितं त्यजेत्॥ चतुरोऽन्यानमूनग्निकार्यं कुर्वन्वने वसेत्। फलस्नेहैः फलैर्वन्यैर्बहुभिः श्रुतिचोदितम्॥ उद्धृत्य परिभूताद्वि तथा वै वित्तवृत्तिकः। फलैर्वन्यैर्वनान्तेश्च फेनपः पञ्चयज्ञकृत्॥ पुत्रस्य भ्रातृपुत्रस्य भ्रातृदौहित्रयोरपि। न दुष्यात्रः कुटीस्थो वा यद्गैक्ष्यं वृत्तिभुक् द्विजः॥ ज्ञेयो बहूदयो नाम यश्च पवित्रपादुकः शिखासनोपवीतानि धातुकाषायवासकृत्॥ चतुर्भेदपरिव्राट् स्यात् कुटीचरबहूदकौ। हंसाः परमहंसाश्च वक्ष्यन्ते तु पृथक् पृथक्॥ साधुवृत्ति द्विजो यस्तु भिक्षाभुगात्मचिन्तकः। बहूदकः स्वयं ज्ञेयः परिव्राट् स त्रिदण्डधृक्॥ एकदण्डधरा हंसाः शिखोपवीतधारिणः। वार्याचारकराः शान्ता भूतानामभयप्रदाः॥ वसेदेकक्षपां ग्रामे नगरे पञ्च सर्वशः। मर्षयन्तो व्रतैर्देहमात्मध्याने सदा रताः॥ एकदण्डधरा मुण्डा कन्थाकौपिनवाससः। अत्यन्तलिङ्गिनोऽव्यक्ताः सर्वदैव च मौनिनः॥ शिखादिरहिताः शान्ताः उन्मत्तरवधारिणः। नग्नः शूरामरैः केषु वासिनो ब्रह्मचिन्तकः॥ ये ते परमहंसा वै नैष्ठिका ब्रह्मभिक्षवः। उक्ता स्तद्व्रतभेदज्ञैरात्मनः प्रार्थनापराः॥ यो ब्रह्मचर्यव्रतचारिभेदो भेदो गृहस्थस्य तथैव पलतः। हिरण्यवासो द्विजकर्मभेदो ह्युक्तो मयासीद् द्विजभिक्षुभेदः॥ ॥इति बृहत्पाराश-

रीये वानप्रस्थयत्याश्रमभेदो नाम एकादशोऽध्यायः॥
मुमुक्षवो विरज्यन्तो देहाद्देहादितो यथा। शरीरज्ञास्तथाप्राहुः परब्रह्मलयं गताः॥ स्ववाद्यगन्यम्बुधात्रीभि सारव्यामाशुनाशिनन्। तन्मुख्ये गुणसंयुक्ते तत्सङ्गक्षालनं व्रजेत्॥ शुक्रशोणित संयोगात् स्त्रीकोष्ठपाकसम्भवम्। दुःखेन दशभिर्मासैर्व्यापितम्भूरि दोहदैः॥ जनन्यादौ गृहाभावे गर्भस्तस्यापि दुःखितः। अतश्च जायमानस्य योनियन्त्रनिपीडनात्॥ जातस्य बालरोगाद्यैः योगिनीग्रहदोषतः। देहिनः सर्वदा दुःखं पूजाजन्मादिकैर्ग्रहैः॥ एवं बाल्ये महद्दुःखं कामार्थे यौवनेऽपि च। स्त्रिया विना तु स्यादीर्षा द्दरिद्रैश्वर्ययोरपि॥ क्षुत्तृड्भ्यां प्रथमे वित्तं रक्षणाद्ये द्वितीयके। द्वन्द्वत्वे वा तयोर्दुःखन्तस्माद्दुःखमयं वपुः॥ मासेन लोपितं बालं स्नायुभिः कुल्यसञ्चयम्। मेदो मेहनसम्पूर्णं कफपित्तस्य साश्रयम्॥ अमेध्यपूर्णसस्रावं दग्धे वै सर्वदा शुचिः। तृप्तायाः स्नानगन्धाद्यैर्निर्गन्धीक्रियते बहिः॥ दुर्गन्धः सर्वरन्ध्रेषु स्वघ्राणोद्वेगकारणम्। सततञ्च स्रावमेध्याङ्गि देहे शोच्यते शुभम्॥ यददग्धं भवेन्मृत्स्ना दग्धभस्मत्वमाप्नुयात्। मृतस्य दृश्यते किञ्चित्तृष्णाकोपरतस्य च॥ क इहाभ्युद्यते विद्वान् कश्चेह म्रियते पुनः। यल्लोपममिदन्धीमन्! वायुस्त्यक्तं मृतम्भवेत्॥ पृथगात्मा पृथक् खानि पृथक् खानि दशानि च। पृथक्भूतानि भूतानि पृथक्तेषां गुणोत्तरः॥ पृथक् पापं द्विपुश्च तद्वृत्तिश्च पृथक् पृथक्। पृथक् पृथगिति ह्येतत् पृथग्भिः किमिहोच्यते॥ आरम्भकाणि यान्येव तेषु यान्ति तदंशकाः। अत्ययाद्यदवाप्नोति याति वीर्यं पुनर्वपुः॥ शृणुयात् पादपस्पर्शं जिघ्रेत् स्वादेन्द्रियां स्मरेत्। स्वपेच्च जागृयाद्गच्छेद्रूयाद्वाये द्यतेत वा॥ गृह्णीयाद्यद्यथाप्यद्य जायेत स नयेदपि। सोऽस्तिकश्चेत्परो देहाद्यो देहीति निगद्यते॥ नैकश्च स्यान्नदेहे वै प्रत्यभिज्ञा कथम्भवेत्। ए

कदर्क् दंष्ट्ररूपस्य पुनरन्येन पश्यतः॥ अद्राक्षं यदहो वस्तु तदेवैतत् स्पृशाम्यथ॥ यच्चास्पृश्यं च पश्यामि प्रतीतिर्यस्य जायते। दर्शनाच्चा तु सततं ग्रहेशादेकवस्तुनः॥ अस्ति ह्यात्मा परो देहात् यो देहीति च कथ्यते। गृहीच गृहमध्यस्थो लग्नादिन समाचरेत्॥ देहे क्षतादि संरोहात् त्रयो देह्यस्ति कश्चन। स एव पूज्यते कुर्वन् उद्देशो तस्य तावित्ति। वार्यते कर्मणाचार्यं बाध्यते कर्मणापि च॥ उभयस्यापि चैवात्र प्रत्यक्षं दृश्यते द्विजाः!। मायावित्तञ्च मूकत्वमतिक्रान्तागताम्बुमान्॥ अन्नं वा धान्यहर्तॄणां पिशुने पूतिनासिना। भरतो वर्णकैश्चित्रैर्देहस्य वर्णयेत्तथा॥ कुर्वन्नानाविधं कर्म तथात्मा कर्मजस्तनूः। जरायुजाण्डजादीनि वपूंषि यो ग्रहेन्निजैः॥ कर्मभिर्वर्णभेदैश्च चित्रदेर्गत्यरुग्यतः। बधिरान्धकिनः क्लीबा जायन्ते पुरुषाधमाः॥ निरतः स पुनर्भूत्वा विद्द्दिमकुलेषु च। महाकुलेष्वि जायन्ते लक्षणाश्चितयान्विताः॥ धनवन्तः प्रजायन्ते वेदवन्तो यशस्विनः। रूपसम्भाग्यसम्पृक्ताः सर्वेषां नयनप्रियाः॥ ब्रह्मा द्याप्सरतां शान्ताः षट्कर्मनिरतास्तथा। पञ्चयज्ञकृतो नित्यं अग्निष्टोमादिषु स्थिताः॥ द्विजोपास्तिकरा नित्यङ्गुर्वाचार्यादि पूजकाः। चतुराश्रमधर्माणां कथिताः समदर्शिनः॥ गुणैः सर्वैः समायुक्तास्तेजस्विनो द्विजप्रियाः। एवम्भूताश्च ये विप्रास्तेषां विष्णुः सदान्तिके॥ विष्णुश्च सर्वदेवत्वं तस्माद्विष्णुमयो भवेत्। देवत्वार्चाकृतां नित्यं शुरूपास्ति र्हृतान्तथा॥ अथैवाचामतां सम्यक् ब्रह्मसान्निध्यमृच्छति तदुपास्यं सदा ब्रह्म यावत्साधनकञ्च यत्॥ बहुपापान्विदित्वा यः संसरेन्नेह मानवे। वदन्ति ब्रह्मदेवेशो ब्रह्मन्यासमनेकशः॥ ब्रह्मापि द्विविधं धाम न परं परमेव च। समात्रं सपरं ब्रह्म शब्दब्रह्मेति कीर्तितम्॥ प्रणवाख्यान्विरूपन्तत् प्रागेव हि विशेषतः। प्राणायामे तदभ्यस्य पूरकाद्यैश्च वायुभिः॥ पूरको कुम्भको वायु रेचकस्तु

द्वितीयकः। येन व्यावर्त्तते वायुर्नासाग्रान्निःसरन्बहिः॥श्वासयोगेनतं मक्तुः पूरकं तद्विदोऽनिलम्।श्वासयोगं वदन्त्येनं कवय स्तन्तुपावनम्॥ विदुस्तं रेचकं तज्ज्ञाः रेच्यश्च शनकैः शनैः॥ न वेगाद्रेचयेद्वायुः सर्वथा विघ्नभाक् भवेत्। मोचयेन्मन्दमन्दन्तु वह्निः स्यात् कुञ्चितो यथा॥नासाग्रस्थितपाणिस्तु सशिरवञ्चालनं क्षमम्। अनिलं रेचयेद्योगी न मन्दं वाति वेगवान्॥ न ज्ञायतेऽनिलो यस्य न्निःसरन्नासिकाग्रतः॥यस्यास्ते कुञ्चितो जन्म प्राणयोगी स उच्यते। दीर्घायुस्त्वं परं ज्ञानं समस्ता योगसिद्धयः॥ देहे तस्यावतिष्ठन्ति प्राणायामवशीकृताः। यत्र तिष्ठति जीवस्य निःसृतेऽमृत उच्यते। स किन्न धार्य्यते प्राणो ब्रह्म तिष्ठति यत्र तु॥प्राण एव हि चात्मा च प्राणो देहस्य वाहकः। शरीरान्निःसृते प्राणे नात्मा विग्रहवाहकः॥ देहं त्यक्त्वा यदा जीवो बहिराकाशमास्थितः। तदा निर्विषयो वायु र्भवेदत्र न संशयः॥ तदा ससर्ज देहेषु नासाग्रमास्थितः शिवः। प्रत्यक्षः सर्वभूतानां तिष्ठते नच लक्ष्यते॥तदा न श्वसने वायु स्तदा निष्कल मुच्यते। नाभिसंस्थन्तु विज्ञाय जन्मबाधाद्विमुच्यते॥ देहस्थः सर्वसत्वानां स जीवति शृणोति च। धर्माधर्मौ अवश्यौ देहे देहे व्यवस्थितौ॥ सु हृत्पङ्कजसंस्थस्तु अथऊर्ध्वं प्रधावति। धर्माधर्मैर्महापाशैर्गृहीतः स प्रवर्त्तते॥ अहं मुच्छ्वसते यावत् प्राणोद्व्यसमीरणात्। तावत्प्राणस्तु विज्ञेयो यावन्नासाग्रमास्थितः॥अत्रस्थं निष्फलं ब्रह्म यावन्न श्वसते द्विजः। श्वसनेन समायोगादाकाशात्पुनरागतः॥ नासारन्ध्रसमालीन स्तदा निष्कल उच्यते। सजीव इति विख्यातः स विष्णुः स महेश्वरः॥ ध्यातव्या देवतास्तत्र क्रमेण पूरकादिषु। विष्णुब्रह्मेश्वरास्तेषु स्थानेषु स्थाः सुरा द्विजैः। नीलपङ्कजविख्यातं आनीय नाभिमध्यतः॥ महात्मानं चतुर्बाहुकेयूरन्तं हरिं स्मरेत्। हृत्स्थे कुम्भके ध्यायेद् ब्रह्माणं प-

ड्ब्जासनम्॥ रक्तेन्दीवरवर्णाभं चतुर्वक्त्रं पितामहम्। रेचके शङ्करं ध्यायेत् ललाटस्थं त्रिशूलिनम्॥ शुद्धस्फटिकसङ्काशं संसारार्णवतारकम्। एवं श्वसनसंरोधे देवतात्रयचिन्तनात्। अग्निर्वाय्वम्बुसंयोगादन्तरं शुध्यते त्रिभिः॥ निरोधादभवद्वायु स्तस्मादग्निस्ततोजलम्। इति त्रिदेवतायोगात् शुद्धन्त्येनं पुनर्द्विजाः॥ भवन्ति प्रणवोपेताः प्राणायामास्तु षोडश। अपि भ्रूणहनं मासात् पुनात्यहरहः कृतः॥प्रातरह्नश्च सायञ्च पूरकं ब्रह्मणोऽन्तिकम्। रेचकेन तृतीयेन प्राप्नुयात् परमं पदम्। न प्राणेनाप्यपानेन वायुवेगेन रेचयेत् ॥प्रागुक्तेन प्रयोगेण मोचयेत्प्राणसंयमी। शरीरञ्च शिरोग्रीवं विहस्ताणि च पादद्वयम्॥ सर्वाङ्गं निश्चलं धार्य्यमापूर्य्य सर्वनाडिकाः। संधृत्याङ्गानि सर्वाणि कर्मविज्ञानकृद्द्विजः॥ बद्धासनो चलाङ्गस्तु कुर्यादसुनिरोधनम्। कृत्वासुसञ्चयं विद्वान् विधिस्तुः समुपस्पृशेत्॥अन्तरं शुध्यते यस्मात् कुर्यादाचमनं स्मृतम्। इत्युक्तः प्राणसंरोधो देवतात्रयसंयुतः॥ त्रिमात्रप्रणवस्तत्र ध्यातव्यः सर्वयोगिभिः। स्पर्यमाणस्य यातस्य विश्रान्तिःस्यादमात्रकैः॥ तत्परं निष्फलं ज्ञानं तद्विदुर्ब्रह्मचिन्तकाः। मृदुमध्योत्तमत्वाच्च स्थूलसूक्ष्मानुभावतः॥ त्रिविधं प्राणसंरोधं विदुस्तत्त्ववेदिनः। क्रियमाणो विशेषेण प्रत्याहारोऽय मुच्यते॥ सर्वं प्रागुक्तमेव स्याद्विशेषं तु निबोधत। बाह्यं वायुं यथोत्साहं आकृष्य यच्छनैः शनैः॥ निरुध्य विधिवद्योगी प्रत्याहारः स उच्यते। व्यावृत्यातिमुखरी यत्र खानि यत्र निरुध्य च॥ चिन्तयेन्निश्चलीकृत्य प्रत्याहारः स उच्यते। प्राणाद्यवयवस्थूलाः संकल्पाद्यासुवायवः॥ निरोद्धव्या दशोऽप्येते प्राणसंयमकारिभिः। वायुरेकोऽपि देहस्थः क्रियाभेदेन भिद्यते॥ प्रकर्षेण समन्ताच्च न यानादिक्रिया स्मृताः। भविष्यातीतकालेभ्यः कर्मभ्यश्चास्तु संयमी॥ सर्वानिळांस्तथाखानि निरुध्यैकत्र धारयेत्। स

धीमान्वेदविद्विद्वान् स योगी ब्रह्मवित्तमः ॥ स्थानं द्विजन्मा विधिव
त् अजस्र माशास्य यथाविविधिः परस्य । पाराशरोक्तैर्चतुर्भिः प्रका
रै रुक्तोविधिः प्राणनिरोधनस्य ॥ प्रत्याहारो विशेषस्तु प्रोक्तस्तस्यै
व चित्तमाः । यदभ्यस्याप्नुयाद्ब्रह्म सर्वदा नैदमव्ययम् ॥ इति वृद्ध-
पाराशरे प्राणायामप्रत्याहारविधिः

यानैस्तु पुनरावृत्तिः कदाचिदिह दृश्यते । संसृतिं नाप्नुयाद्येन
शक्रस्तुस्तदाब्रवीत् ॥ उक्तोऽसि संयमं पूर्वं विधिहीनोहि नाशनः ।
निबोधध्वं चतुर्थन्तु ध्यानं प्रणववेधसाः ॥ विधिवत्प्रणवध्यान मे
कचित्तन्तु योऽभ्यसेत् । ब्रह्माभ्येति स मुक्तात्मा स योगी योगिनां व
रः ॥ तद्ध्यानमसुसंरोधं तुर्यसम्यगिहोच्यते । तदत्रार्थ्यान पेक्षन्तु
चिन्तापेक्षविवर्जितम् ॥ तच्छान्तं निर्मलं शुद्धं ध्यातव्यं हृत्सरोरु
हे । तद्धेयन्तु हरेण्यन्तु मुक्तिबीजं तदुच्यते ॥ साब्रिंस्त्र व्याहृतीः सप्त
प्रणवा द्या स्तदन्तकाः । सम्यग्युक्त मिदं ध्यात्वा परेब्रह्मणि योज-
येत् ॥ हुतभुक् पवनो जीवस्त्रयोऽप्येतेहृदिस्थिताः । ये तत्सर्वन्तु वै
कत्र संसारे ध्यानकृद्द्विजः ॥ ॐ कारावर्त्तनालेन उद्धृत्य परियोजये
त् । योजयेत्सर्वमेवैतात्सिद्धयोगी स उच्यते ॥ शून्यभूतं तु यत्प्राणो
ह्रासजीवितसंज्ञितम् । यस्मादुत्पद्यते श्वासः पुनस्तत्र निवेशये
त् ॥ आद्यन्तप्रणवं विद्वान् घटाकाशवदुत्सृजेत् । स पश्यन् निर्गलं
योगीपुरुषं मम संशयम् ॥ अन्तर्वक्रः बहिः सम्यकुण्डलीभूतसर्पव
त् । ध्यातव्यः प्रणवस्तस्य मध्यमं धाम संस्मरेत् ॥ स ध्यातात्मा
स बिन्दुश्च तदेवं परमं पदम् । तदभ्यस्तं हि तज्ज्ञात्वा स तस्मिन्नेव
लीयते ॥ प्रथमं प्रणवो वक्र स्त्र्यक्षरः परमाक्षरः । रुजस्तमन्यदा प्नो
ति संप्राप्य परमं पदम् ॥ पञ्चमं तु पदं विद्वन् ! तन्मूर्धन्यवतिष्ठते ।
नादबिन्दुः समाख्यातो द्विजेन्द्राः ! परमंपदम् ॥ यत्प्राप्य न निवर्त्त-
न्ते भारत्यस्त्वात्यमेव च । सर्वेभ्यो मातृकावर्णाः पुनस्तत्र विशान्ति च ।

वर्णात्मिका सन्नवर्णास्तु समस्तं वर्णजीवनम् ॥ न दीर्घं न च ह्रस्वञ्च न घोषं नाप्यघोषवत् । न विसर्गस्य वा विद्वान् नानुस्वारविपर्ययः ॥ हृद्याकाशनिविष्टं यदचलत्वं प्रयाति चेत् । ज्ञानयोगे त्रिषष्टिर्वै यो वि भर्त्यक्षराणि तु ॥ तत्परं योगिभिर्ध्येयं व्योम यस्य तु मध्यमम् । व्योमान्तगं यत्तु ध्येयमनन्ताकाशमव्ययम् ॥ चिन्तयामो वयं तत्त्वं धियो यो नः प्रचोदयात् । ये तद्ब्रह्मत्रयीरूपमेतद्दृष्टं त्रयीमयाः ॥ येषां स परमा मुक्तिर्गत्वा यां न निवर्त्तते ॥ आदाय चापं प्रणवं च बाणं सन्धाय चात्मानमवेक्ष्यलक्ष्यम् । सम्यग्विधिं तं प्रविविश्य तस्मिन् प्राप्नोति योगी स तु मुक्तिधाम ॥ उद्देशभक्तिं विधिनप्रदे विद्वन् ! ध्यानं विधेयं ध्वनिपूर्वकञ्च । सर्वं विधानं विधिवच्च सम्यक् यस्तु समर्थो विधिरेव चास्य ॥ इति श्री बृहत्पाराशरीये योगाध्याये प्रणवध्यानविधिः सम्पूर्णः ।

अथान्यत्संप्रवक्ष्यामि विधानं ध्यानकर्मणाम् । नानामतोदितं कार्यं परब्रह्मात्मिकारकम् ॥ कामात्मकमिह प्रोक्तं परमात्मा किमुच्यते । वक्ष्यमाणमिदं विप्राः ! शृणुध्वं भक्तितत्पराः ॥ स्वीयेन कर्मणा येषां शरीरग्रहणं भवेत् । कर्मात्मिन स्त दुच्यन्ते निर्गताः परमात्मनः ॥ येन स्पृशन्ति सत्त्वांश स्तथा सत्त्वदयोगुणाः । कदाचित्केन कर्माणि परमात्मा ततः परम् । निष्ठानाशौचविद्येति गुणत्रयं स्पृशन्ति हि ॥ सो यस्मिन् कथमेतस्मिन् लोकपालो विधीयते स्वात्मानमेव चात्मानं वेष्टकोष्टककारवत् ॥ कर्मणैव प्रजातस्तु वा ह्यस्वार्थविमोहितः । तस्माद्विवर्जयेत्कर्म स्वर्गादेरपि साधकम् ॥ संसारेस्वर्गतेः कर्मक्षयः सतु पुनर्यतः । सीमैषा परमा विप्रा ब्रह्मणः पातमोक्षयोः ॥ कर्मस्थानमिदं धात्री कृतमत्रोपभुज्यते । वैदिकः कर्मयोगश्च द्विवोऽप्यावत कस्य तु ॥ योतेहा रत्तिकस्त्वच्च ज्ञानयोगमतोऽभ्यसेत् । हृद्विनिःसृतनाडीनां सहस्राणां हि सप्ततिः ॥

तन्मध्यावस्थितं तेजः शशिप्रभया भाति यत्। यन्मध्यमण्डलेह्यात्मा विधूमानलदीपवत्। संज्ञातव्यो विदित्वा तं संसरेन्न पुनर्यतः॥ भूरिभुवमधोवक्त्रं तज्ज्ञातव्यं व्यवस्थितम्। नानुच्छेदेन वातेन कुत्सोद्यास्य विकासयेत्॥ विकास्य तस्य मध्यस्थ मचलं दीपशिखेव तत्। तदूर्द्ध्वं निःसरेत्सुभ्रं सूक्ष्मं तत्तु विचिन्तयेत्॥ ठलनद्वारनिर्गच्छन् कुन्तयोगीच चिन्तयेत्। तावत्तु चिन्तयेद्यावन्निरालम्बश्च इच्छति॥ निरालम्बं यदा ध्यानं कुर्वाणो निश्चलो भवेत्॥ तदा तदुच्यते ब्रह्म स योगी ब्रह्मवित्तमः। तसदश्च पदातीनां तस्मासौ मुक्त उच्यते॥ इति ध्यानं विधातव्यं मुक्तिकृद्भि र्द्विजैर्द्विजाः॥ भूतानामात्मभूतस्य तानि सम्यक् प्रपश्यतः॥ विमुह्यत्यमरो मार्गे पदं किं न पदस्य तु। यो न तिष्ठति यो याति न कश्चित्सर्वथैव यः॥ अवाग्यो वाङ्मयोऽन्यस्तु सर्वश्रुति प्रचोदितः। योऽन्तिकेऽपि दवीयांश्च योऽस्ति नास्तिस्वरूपकः॥ यस्येदं नममेति स तत्रैव च प्रलीयते। यस्तु सर्वाणि भूतानि पश्यत्यात्मगतानि तु॥ आत्मानं तेषु सर्वेषु ततो यो न वियुज्यते। सर्वभूतानि भूतात्मा यत्र तिष्ठति धीमते!॥ शोकमोहौ च कौ तस्य ह्येकत्व ह्यनुपश्यतः। समाप्तावुत्तमादीनां यन्मन्तं ब्रह्म यो द्विजः॥ ॐ खं ब्रह्मेति चाम्नायो दर्शकश्चैष वेधसः। आत्मज्ञान बहूपाया उक्ता स्तत्र्न्ये च कोविदैः॥ तैस्तैः सर्वैः स मन्तव्यो स ज्ञातव्योपदेशतः। ज्ञातव्यः परमात्मैवं भक्तिं कृत्वा परेण तु। ध्यानज्ञानस्य तद्व्यक्ते यत्र विश्रमते मनः॥ तदेवोपदिशेत्तस्य वस्तुज्ञानोपदेशकम्। मनो यस्य विषण्णन्तु यत्र ज्ञाते च वस्तुनि॥ ध्यायेत्स तु तदेवेति यावत्स्यात् ध्यानसन्ततिः। ध्याने तत्र तु संलग्ने हरावात्मनि वा पुनः॥ ध्याने नियोजयेद्योगी तं निरालम्बतां नयेत्। योगशास्त्रेषु यथोक्तं रहस्यारण्यकेषु च॥ तत्तथोपदिशेद्ध्यानं ध्यायेदपि तथैव च प्रवदन्त्यन्यथा केचिच्छुभादि भेदवांस्ततः॥ त्रैविध्यं विदुषो विद्-

न्विद्धि तत्त्वंपरं पदम् । चित्तजं श्रुतिजं भावं भावनाभावमेव च ॥ त्रिविधमात्मविधेत योगाभ्यासफलाफलम् । आत्मशक्तिशिवस्येति चैतन्यमतिसंस्थितम् ॥ उत्तरोत्तरवै शिष्यान् योगाभ्यासः प्रवर्त्तते । स एको निष्फलीभूतः कर्मात्मा यत्र योजितः ॥ न बिभेति सचैकाकी भयं वै जायतेऽन्यतः । न देवगतिभि र्ब्राह्म्यं ध्यानं यस्यास्ति योगिनः ॥ सम्वित्सोऽत्र ह्यजं शान्तं कदाचित् कुवरेण तत् । त्र्यम्बकश्च चतुर्वक्त्र श्चतुर्बाहुः परेश्वरः ॥ एकएव महेशो वै ततस्त्रिधेति कीर्तितः । नाभिमध्यस्थितं विद्धन्विज्ञानेन सुनिर्मलम् ॥ रविचन्द्रजमानन्तु काशद्रश्मिगणैर्द्विजाः । । चिन्तयेन्हृदि मध्यस्थं दीप्तिमत् सूर्यमण्डलम् ॥ तस्य मध्यगतो सोमवह्निचन्द्रशिखा महान् । तन्मध्यन्तु परं सूक्ष्मन्तन्ध्याये द्योगमात्मनः ॥ तन्मध्ये चिन्तयेद्देवं वक्ष्यमाणक्रमेणतु । बिम्बमध्यगतो नादो नादमध्यगतो ध्वनिः ॥ ध्वनिमध्यगतः सारःसारमध्यगतोंऽशुमान् । तस्य मध्यगतं ब्रह्म शान्तं तस्य तु मध्यगम् ॥ परं पदन्तु यच्छान्तं सम्यगुद्धृत्य यो व्रजेत् । जीवात्मा कायमध्यस्थ स्तत्रापि देहवर्जितः ॥ वक्त्रनासापुटस्थस्तु भुञ्जीत हृद्यान् प्रभुः । इत्येतन्ध्यानमार्गन्तु वदन्ति कवयो द्विजाः ॥ ॥ कश्चिदन्यान्यथा ब्रूयूरूपं ब्रह्मविदो विदुः । न ममापि हि दुःखस्य शर्म यत्र निरन्तरम् ॥ ब्रह्मणोरूपमानन्दन्तन्मुक्तरूप मुच्यते । सर्वव्यापी य एकस्तु यश्चानन्तश्च भावकः ॥ स मन्तव्योऽजरोह्यात्मा सर्वं व्याप्य च यः स्थितः । एकं व्योम यथानेकं मविधेरुपलभ्यते ॥ एकोऽप्यात्मा तथानेको जलाधारेषु सूर्यवत् । विश्वरूपोमणिर्यद्वद्वर्णान् गृह्णात्यनेकशः ॥ उपाधिस्थ स्तथात्वेको नानादेहेषु कर्मतः । कलाकाष्ठादिभेदेन वर्त्तमानादिभेदतः ॥ एकः - कालो यथा नाना तथात्मैकोऽप्यनेकधा । देहमध्यस्थितं देवं यो न ध्यायति मूढधीः ॥ सोऽर्कलब्धं मधुत्यक्त्वा क्लेशायाज्ञो गिरौ व्रजेत् । यत्तीर्थयानं जपयागहोमान् कुर्याद्दपुण्यान् सतु वैष्णवः स्यात् । सचैव पिंड

परिहृत्य दूरादङ्गप्रभावैश्च वरिष्ठपृष्ठे॥संक्राम्य वै विधिवशात्क
रणोग्रचक्रे पापेन कुम्भदवधात्रृवरेण नूनम्।आरोप्य सोऽर्धवृ
त दण्डसुखेन नृणां हृत्पद्मसंस्थशिवतत्त्वमतिमहीणाम्॥ द्वौ मा
र्गावात्मनो ज्ञेयौ ब्राह्मणैर्ब्रह्मचिन्तकैः। अभियाति विदित्वाथ
सायुज्यं परवेधसः॥वह्न्यधूमादिरेको वै द्वितीयस्तु विराडिकः।
यत्र देवौ प्रतीतव्यौ यस्मातीतिरजायत॥ धूमः क्षिप्रं सितः पक्षो
दक्षिणायनमेव च। लोकपित्र्यञ्च चान्द्रश्च मातरिश्वानुकर्ष
णः॥पाथोधात्री क्रमादेते सम्भवन्ति ममाश्रिताः। अर्चीरहः
सितः पक्ष स्तथानैवोत्तरायणम्॥ देवलोक स्तथा सूर्यः विद्यु
तश्च क्रमादिमान्। मनसा पुरुषा यान्ति तानतो ब्रह्मलोकता-
म्॥ यत्रजातो ध्रुनर्देहं संसरन्ति पुनर्द्विजाः॥ मार्गं हृय पुनर्धी
मन्मन्तव्यं सद्द्विजे द्विजः॥ यन्न ज्ञानेन विज्ञातुं नाकमोक्षौ च
सिध्यतः। स औरण्यस्थभिक्षूणां त्रयाणामपि स द्विजाः॥ स
मानज्ञानमेतद्ध इति ब्रह्मविदोविदुः। यथा दहति वैधांसि समिद्ध
स्त्वाशुशुक्षणिः॥ज्ञानमभ्यस्यमानन्तु तथा दहति संसृतीः। त
स्मान्मार्गद्वयेनापि ह्यात्माज्ञेयो भवेद्विजैः॥ येन जानन्ति तेषां
तु इदं यूकादियोनिषु। पन्नगत्वं कृमित्वं वा कीटत्व मथवाप्नुयुः
॥एतेभ्यस्त्वधमेभ्यश्च जायन्ते तासु योनिषु। विद्याविद्भिःस म
न्तव्यः स हेतुः स्वर्गमोक्षयोः॥विद्यामोक्षप्रदात्ता च अविद्याम
न्युनाशकृत्। ज्ञानयोग स्तथाकर्म विद्याविद्भिःस्मृता बुधैः॥
अपवर्गाय वै नृणां कर्म त्रिविष्टपाय च। कर्मापि क्रियमाणं नि
रपेक्षं मोक्षकृद्भवेत्॥ विष्णवे गुरुवे वापि कर्म कृत्वा निवेदयेत्।
आत्मनः फलमिच्छद्भि र्यत्कर्म क्रियते नृभिः॥तेनैव वाञ्छितावा-
प्ति स्तेनान्यद्योपजायते। हरिं वानित्यमभ्यस्य सर्वभावेन सद्द्वि
जैः॥तदभ्यासवदाप्नोति मृत्युदाहान् हरिस्मृतेः।एक एव हि स

ध्येयो यत्परं नास्ति किञ्चन॥विनाशमानू महानेष स ध्येयः संयतेन्द्रियैः। महान्तं पुरुषं देवं हृदिरूप मतः परम्॥ ब्रह्मवित्तस्य मृत्युर्वै प्रयाति ह्यनिवर्त्तकम्। एष एव नृणां पन्था ब्रह्मा वै य मुपासते॥दास्य जन्मस्च नेकेषु विचिन्त्यैकचेतसाम्। नाभि भक्तापि वै केन नान्यभ्यासकृतेरपि॥ब्रह्मासिजन्मनां पुंसां किन्तु सा भूरिजन्मभिः। यतयः सर्वदाभ्यासाद्ब्रह्म यन्न प्रपेदिरे॥ तन्मनुष्यैः कथं प्राप्य मेकेनैव नु जन्मना। ज्ञानाभ्यासेन तद्ब्रह्म नैश्च दक्ष स्वरूपकैः॥ न प्राप्यते परं ब्रह्म न चाप्यासनमुद्रया। बहुभिः किमुपायैस्तु प्रोक्तैर्वा यन्यविस्तरैः॥एकमेवाभ्यसेत्तन्तु ये न चित्ते भवेद्धरिः। एकैव शुद्धिस्तु सदा यथा स्यात् क्रियतां तथा॥ नैव कुर्य्यान्मनस्यन्यं विरुद्धमिति सर्वथा। भावः स्वर्गाय मोक्षाय नरकायापि स स्मृतः॥ तस्मात्तं शोधयेद्यत्नाच्छुचिः स्याद्भावशुद्धितः। एकस्य पुत्रकर्तारौ उक्तस्यापिच योषितः॥भिन्नभावो भवेतात्तावतीव वै विशोधयेत्। परिष्कृतो नरो नार्याः संह्लादयति यौवनम्॥तल्पस्थोऽपि सकामान्तां भावहीनो न कामयेत्। एकोभावो हृतै कार्यो यथा स तु न वै चलेत्॥ तद्बुद्ध्या पञ्चतामिच्छन् स्वर्गमोक्ष मवाप्नुयात्। कृत्वापि विविधान्यागांस्तपस्तप्त्वा सुदुष्करम्॥ मृत्युकाले मतिर्यस्माद्गतिं तानेव विन्दति। योगप्रयोगः कथितः द्विजेन्द्रा ! ध्यानस्य मार्गो बहुधापि चापि। योऽभ्यस्यमानस्तु भवद्विधानां ब्रह्मासिकृद्दस्तु तथा द्विजानाम्॥प्रत्याहारश्च योगश्च ध्यानविस्तरतस्तथा। उक्तं द्विजहितार्थं वै ब्रह्मावासिकरं द्विजाः!॥ अंगुल्यंगुष्ठयोर्नादक्षणं स्यात्तद्द्वयं त्रुटिः। द्वाभ्याञ्चैव लवस्ताभ्यां निमेषोऽपि लवद्वयम्॥ तैः पञ्चदशभिः काष्ठास्ताश्च त्रिंशत्कलाः स्मृताः। द्वाविंशति त्रिभागस्तु त्रुटिकेति प्रकीर्तिता॥ तद्द्वयञ्च मुहूर्तः स्यात्ते त्रिंशत्तु स्त्यादिनम्। तत्पञ्चदशकं पक्षस्तत्द्वयं मास उच्यते॥ त

द्वयं ऋतुरित्युक्तं तद्द्वयं काल उच्यते । तत्सार्द्धमयनं प्रोक्तं तद्द्वयं व-त्सरस्तथा । पञ्चभिस्तैर्युगः प्रोक्तो तद्द्वादशकषष्ठकम् ॥ षष्ठकः ष ष्टिगुणितो वाक्पते युगमुच्यते । षष्टिघ्नः सोऽपि कालज्ञैः प्रजाना ञ्च युगः स्मृतः ॥ तद्द्वयन्तु कलिः प्रोक्तो तद्द्वयं द्वापरं भवेत् । कलित्र याणां त्रेता स्यात् कृतं कलिचतुष्टयम् ॥ कलिभिर्दशभिर्विद्वान् चतु र्युग मिति स्मृतम् । चतुर्युगसहस्रेण त्वजाहः कल्प उच्यते ॥ अष्टयुगा पितृसन्ध्या सायंसंध्या पितावती । तदेकसप्ततिगुणं मन्वन्तर मिति स्मृतम् ॥ मन्वन्तरद्वयेनेह शक्रक्षयः प्रकीर्तितः । एवं मानेन वर्षाणां शतं ब्रह्मक्षयः स्मृतः ॥ ब्रह्मक्षयशतेनापि विष्णोरेक महर्भवेत् । ए तद्विधाः समासेन प्रयातेऽब्दशते द्विजाः ॥ रुद्रस्यात्मनि लीयन्ते भूतभौतिकसृष्टयः । ऊर्ध्वं प्रयातेन परंपदं तत्तद्ध्यानयोगात् स तु तत्र लीयते । परम्पराणां परमन्त्वचिन्त्यं परात्परं दिष्टपदादतीतम् ॥ क्षणादिकालं क्रमशोऽप्यमत्तः प्रयाति चैतत्पदमव्ययं तत् । कालज्ञानेन योगेन योगिभिर्ध्यानकारिभिः ॥ मुमुक्षुभिः सदा ज्ञेयं निरालम्बं परं पदम् । पराशरोक्तशास्त्रन्तु चातुर्वर्णो जनाश्चरेत् ॥ हितमुक्तं प्रयत्नेन सदा ध्येयं विजायते । श्रावयिष्यति यः श्राद्धे ब्राह्मणान् भक्तितत्पराः ॥ प्राप्स्यन्ति पितरस्तस्य तृप्तिं वै शाश्वतीं द्विज ! । द्वादशं दश वा सप्त षडष्टौ वाथवा नव ॥ दैविके पैतृके वापि श्लोकाः श्राव्या द्विजातिभिः । य इदं शृणुयाद्विप्रः श्रावयेत्पाठयेदपि ॥ स प्रध्वस्तसमस्तैना ब्रह्मलोक मवाप्नुयात् । त्रिभिः श्लोकसहस्रैस्तु त्रिभि र्दत्तशतैरपि ॥ पाराशरोदितं शास्त्रं सुव्रतः प्रोक्तवान् मुनिः ॥

॥ इति श्रीबृहत्पाराशरस्मृतिः सम्पूर्णा ।

---

# लघुव्यास संहितायाम्।

ऋषयऊचुः। अहन्यहनि कर्त्तव्यं कर्माणां हि क्रमाद्विधिम्। ब्राह्मे मुहूर्त्ते उत्थाय धर्मार्थावनुचिन्तयेत्॥कायक्लेशांश्च तन्मूलान् वेदतत्त्वार्थ मेवच। उषः काले तु संप्राप्ते कृत्वाचावश्यकं बुधः॥ स्नायान्नदीषु शुद्धासु शौचं कृत्वा यथाविधि। प्रातःस्नाने न पूयन्ते येऽपि पापकृतो जनाः॥ तस्मात्सर्वः प्रयत्नेन प्रातःस्नानं समाचरेत्। प्रातः स्नानं प्रशंसन्ति दृष्टादृष्टफलप्रदम्॥ऋषीणां कुर्वतां नित्यं प्रातः स्नानं न संशयः। मुखे सुप्तस्य सततं लालानित्यं स्रवन्ति हि॥ ततो नैवाचरेत्कर्माण्यकृत्वा स्नानमादितः। अलक्ष्मी कालकर्णी च दुःस्वप्नं दुर्विचिन्तनम्॥ प्रातःस्नानेन पूयन्ते सर्वपापान्नसंशयः न हि स्नानं विना पुंसां प्राशस्त्यं कर्मसु स्मृतम्॥ होमे जप्ये विशेषेण तस्मात् स्नानं समाचरेत्। अशक्तोऽपशिरस्कं वा स्नानमात्रं विधीयते॥ आर्द्रेण वाससा चाङ्गमार्जनं कापिलं स्मृतम्। अप्राशस्त्ये समुत्पन्ने स्नानमेव समाचरेत्॥ब्राह्म्यादीन्यथवाशक्तो स्नानान्याहुर्मनीषिणः। ब्राह्ममाग्नेयमुद्दिष्टं वायव्यं दिव्यमेव च॥ वारुणं यौगिकं चैव सदा स्नानं प्रकीर्तितम्। ब्राह्मं तु मार्जनं मन्त्रैः कुशैः सोदकबिन्दुभिः॥आग्नेयं भस्मना स्नानं वायव्यं गोरजःस्मृतम्। यत्तु सातपवर्षेण तत् स्नानं दिव्यमुच्यते॥वारुणञ्चावगाहञ्च मानसञ्चात्मवेदनम्। यौगिकं स्नानमाख्यातं योगोऽयं विष्णुचिन्तनम्॥आत्मतीर्थमिदं ख्यातं सेवितं ब्रह्मवादिभिः। मनः शुद्धिकरं पुंसां नित्यं तत् स्नानमाचरेत्॥शक्तश्चेद्वारुणं विद्वानप्राशस्त्ये तथैवच।प्रक्षाल्य दन्तकाष्ठञ्च भक्षयित्वा विधानतः॥आचम्य प्रयतोनित्यं प्रातःस्नानं समाचरेत्।मध्याङ्गुलीसमस्थौल्यं द्वादशाङ्गुलिसम्मितम्॥ सत्वचन्दन्तकाष्ठं स्यात्तस्याग्रेण तु धावयेत्। क्षीरवृक्षसमुद्भूतं मालिनीसम्भवं

शुभम्॥ अपामार्गञ्च बिल्वञ्च करवीरं विशेषतः। वर्जयित्वा निषिद्धानि गृहीत्वैकं यथोदितम्॥ अपहृत्य दिनं पापं भक्षयित्वा विधानवित्। आचम्य प्रयतोनित्यं स्नानं प्रातः समाचरेत्॥ नोत्पादयेद्दन्तकाष्ठमङ्गुल्या धावयेत् कचित्। प्रक्षाल्य भक्त्या तर्जन्या शुचौ देशे समाहितः॥ स्नात्वा सन्तर्पयेद्देवान् ऋषीन् पितृगणान् क्रमात्। आचम्य मन्त्रवन्नित्यं पुनराचम्य वाग्यतः॥ मार्जनं वारुणैर्मन्त्रैरात्मानं सकुशोदकैः। आपोहिष्ठादिव्याहृतिभिः सावित्र्या वारुणैस्तथा॥ ओंकारव्याहृतियुक्तां गायत्रीं वेदमातरम्। जप्त्वा जलाञ्जलिं दद्याद्भास्करं प्रति तन्मनाः॥ प्राक् तु तेन समासीनो दर्भेषु सुसमाहितः। प्राणायामत्रयं कृत्वा ध्यायेत्सन्ध्यामिति श्रुतिः॥ या सन्ध्या सा जगत्सृष्टिस्थितिसंयमकारिणी। ऐश्वरी तु पराशक्तिस्तत्र समुद्भवा॥ सवितुर्मण्डलगतां गायत्रीं वै जपेद्बुधः। प्राङ्मुखः प्रयतो विप्रः सन्ध्योपासनमाचरेत्॥ सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु। यदन्यत् कुरुते कर्म न तस्य फलमाप्नुयात्॥ अनन्यचेतसो शान्ता ब्राह्मणा वेदपारगाः। उपास्य विधिवत्सन्ध्यां प्राप्ताः पूर्वे पराङ्गतिम्॥ योऽन्यतः कुरुते यत्नं धर्मकार्ये द्विजोत्तमाः। विहाय सन्ध्याप्रणतिं स याति नरकायुतम्॥ तस्मात्सर्वप्रयत्नेन सन्ध्योपासं समाचरेत्। उपासितो भवेत्तेन देवयोगतनुः परः॥ सहस्रपरमां देवीं शतमध्यां दशावराम्। गायत्रीं वै जपेद्विद्वान् ब्राह्मणः प्रयतः स्थितः॥ इति लघुव्यासस्मृतौ प्रथमोऽध्यायः।

अथागम्य गृहं विप्रः समाचम्य यथाविधि। अग्निं प्रज्वाल्य विधिवत् जुहुयाज्जातवेदसम्॥ ऋत्विक् पुत्रोऽथवा पत्नी शिष्योऽपि च सहोदरः। प्राप्यानुज्ञां विशेषेण जुहुयाद्वा यथाविधि॥ पवित्रपाणिः शुद्धात्मा शुक्लाम्बरधरोऽपरः। अनन्यमानसो वह्नौ जुहुयात्संयतेन्द्रियः॥ विना दर्भेण यत्कर्म विना सूत्रेण वा पुनः। नाक्षय

स्तद्भवेत्सर्वं नेहामुत्र फलप्रदम् ॥ देवतादीन्नमस्कुर्यादुपहारं निवेदयेत् । दद्यात्पुष्पादिकां स्तासां वृद्धांश्चैवाभिवादयेत् ॥ गुरुञ्चैवाप्युपासीत हितं तस्य समाचरेत् । वेदाभ्यासं ततः कुर्यात्प्रयत्नाच्छक्तितो द्विजः ॥ वेदमध्यापयेच्छिष्यान् धारयेच्च विपाठयेत् । अपेक्षेत च शास्त्राणि मन्वादीनि द्विजोत्तमाः ॥ वैदिकान्नियमान्वेदान्वेदाङ्गानि च सर्वशः ॥ उपेयादीश्वरञ्चैव योगक्षेमार्थसिद्धये । साधयेद्विविधानर्थान् कुटुम्बार्थे तथैव च ॥ ततो मध्याह्नसमये स्नानार्थं मृदमाहरेत् । पुष्पाक्षतान् कुशतिलान् गोमयं गन्धमेव च ॥ नदीषु देवखातेषु तडागेषु सरित्सु च । स्नानं समाचरेन्नित्यं नदीप्रस्रवणेषु च ॥ परकीयनिपानेषु न स्नायाद्वै कदाचन । पञ्च पिण्डान् समुद्धृत्य स्नायाद्वा सम्भवात् पुनः ॥ मृदैकया शिरः क्षाल्य द्वाभ्यां नाभेस्तथोपरि । अतश्चतसृभिः कार्यं पादौ षड्भिस्तथैव च ॥ मृत्तिका च समाविष्टा स्यादामलकमात्रतः । गोमयस्य प्रमाणं तत् तेनाङ्गं लेपयेत्ततः ॥ लेपयेदथतीरस्थस्तल्लिङ्गैरेव मन्त्रतः । प्रक्षाल्याचम्य विधिवत् ततः स्नायात्समाहितः ॥ अभिमन्त्र्य जलैर्मन्त्रैस्तल्लिङ्गैर्वारुणैः शुभैः । आपो नारायणोद्भूता स्तानेवास्यायनं पुनः ॥ तस्मान्नारायणं देवं स्नानकाले स्मरेद्बुधः । प्रोक्ष्यसोङ्कारमादित्यं त्रिर्निमज्जेज्जलाशये ॥ आचान्तः पुनराचामेन्मन्त्रेणानेन मन्त्रवित् । अन्तश्चरति भूतेषु गुहायां विश्वतोमुखः ॥ त्वं यज्ञस्त्वं वषट्कार आपोज्योतिरसोऽमृतम् । द्रुपदां वा त्रिरभ्यस्येद्व्याहृतिं प्रणवादिकाम् ॥ सावित्रीं वा जपेद्विद्वान् स्तथैवाप्यघमर्षणम् । ततः सन्मार्जनं कुर्य्यादापोहिष्ठामयोभुवः ॥ इदमापः प्रवहत व्याहृतिभिस्तथैव च । ततोऽभिमन्त्र्य तं तीर्थमापोहिष्ठादिमन्त्रकैः ॥ अन्तर्गतजलेमग्नो जपेत् त्रिरघमर्षणम् । द्रुपदां वाथ गायत्रीं तद्विष्णोः परमम्पदम् ॥ आवर्त्तयेद्वा प्रणवं देवं वा संस्मरेद्धरिम् । द्रुपदोहि परो मन्त्रो यजुर्वेदे प्रतिष्ठितः ॥

अन्तर्जलान्त्रिरावृत्त्या सर्वपापैः प्रमुच्यते।आपः पाणौ समादाय जप्त्वा वा मार्जने कृते॥ विन्यस्य मूर्ध्नि तत्तोयं सर्वपापैः प्रमुच्यते। यथाश्वमेधः क्रतुराट् सर्वपाप प्रणोदनः॥ तथाघमर्षणं सूक्तं सर्वपाप प्रणोदनम्। अथोपतिष्ठेतादित्य मूर्ध्वं पुष्पाञ्जलान्वितम्॥ प्रक्षिप्य देवमादित्यं ऋग्यजुः सामरूपिणम्। उदुत्यञ्चित्रमित्येतत् तच्चक्षुरितिमन्त्रतः॥ हंसः शुचिषु इत्येतत्सावित्र्या च विशेषतः। अन्यैश्च वैदिकैर्मन्त्रैः सर्वपाप प्रणाशनैः॥ सावित्रीं वै जपेत् पश्चाज्जपयज्ञः प्रकीर्तितः। विविधानि पवित्राणि गुह्यविद्यास्तथैव च॥ तिष्ठन् न देक्षमाणोऽर्कं जपं कुर्यात्समाहितः। आसीनः प्राङ्मुखो नित्यं जपं कुर्याद्यथाविधि॥ स्फटिकेन्द्राक्षपद्माक्षैः पत्र दीप कुरुक्षकैः। कर्तव्या त्वक्षमाला स्यात् विशिष्टा चोत्तरोत्तरा॥ जपकाले न भाषेत नाङ्गानि चालयेत्तथा। न कम्पयेच्छिरोग्रीवां दन्तान्वै न प्रकाशयेत्॥ गुह्यका राक्षसाः सिद्धा हरन्ति प्रसभं हि तत्। एकान्ते तु शुचौ देशे तस्माज्जप्यं समाचरेत्॥ चण्डाला शुद्र पतितान् दृष्ट्वाचम्य पुनर्जपेत्। आचम्य प्रयतो नित्यं जपेदशुचिदर्शने॥ सौरान्मन्त्रान्यथोत्साहं पावमानांश्च शक्तितः। आचम्य च यथाशास्त्रं शक्त्या स्वाध्यायमाचरेत्॥ ततः सन्तर्पयेद्देवान् ऋषीन् पितृगणान् क्रमात्। आदौ ॐकारमुच्चार्य नाम्नोऽन्ते तर्पयामि च॥ देवान् ब्रह्मऋषींश्चैव तर्पयेदक्षतोदकैः। पितॄन् तिलोदकैश्चैव विधिना तर्पयेद्बुधः॥ अपसव्येन सव्येन पाणिना दक्षिणेन तु। देवर्षीं स्तर्पयेद्धीमान् उदकाञ्जलिभिः पितॄन्॥ यज्ञोपवीती देवानां निवीति ऋषितर्पणे। प्राचीनावीति पित्र्येषु स्वेन तीर्थेन भावितम्॥ निष्पीड्यैव तु वस्त्रञ्च समाचम्य यथाविधि। स्वैर्मन्त्रैरर्चयेद्देवान् पुष्पैः पत्रैस्तथाम्बुभिः॥ ब्रह्माणं शङ्करं सूर्यन्तथैव मधुसूदनम्। अन्यांश्चाभिमतान् देवान् पूजयेद्भक्तितो द्विजः॥ प्रदद्याद्वाथ पुष्पाणि विन्यसेच्च पृथक् पृथक्। न विष्ण्वाराधनात् पु-

ण्यं विधत्ते कर्म वैदिकम् ॥ तस्मादनादिमध्यान्तं नित्यमाराधयेद्धरिम् तद्विष्णोरितिमन्त्रेण सूक्तेनापौरुषेण च ॥ नैताभ्यां सदृशो मन्त्रो वेदेषूक्तश्चतुर्ष्वपि। निवेदयित्वा चात्मानं विमलन्तत्र तेजसि ॥ तदात्मा तन्मनः शान्तः तद्विष्णोरिति मन्त्रतः। अथवा देवमीशानम्भगवन्तं सनातनम् ॥ आराधयेन्महेशानं महादेवं महेश्वरम्। मन्त्रेण रुद्रगायत्र्या प्रणवेनाथ वा पुनः ॥ ईशानेनाथ वा रुद्रैस्त्र्यम्बकेन समाहितः। पुष्पैः पत्रैरथाद्भिर्वा चन्दनाद्यैर्महेश्वरम् ॥ अथो नमः शिवायेति मन्त्रेणानेन याचयेत्। नमस्कुर्यान्महादेवं अमृतं परमेश्वरम् ॥ निवेदयित्वा स्वात्मानं यो ब्राह्मणमतः परम्। प्रदक्षिणन्ततः कुर्यात्ततो ब्रह्माणि वै जपेत् ॥ ध्यायेत देवमीशानं व्योममध्यगतं शुभम्। अथवा लोकयेदर्कं हंसः शुचिषदित्यृचा ॥ कुर्यात् पञ्चमहायज्ञान् गृहङ्गत्वा समाहितः। देवयज्ञं पितृयज्ञम्भूतयज्ञन्तथैव च ॥ मनुष्य ब्रह्मयज्ञञ्च पञ्चयज्ञान् प्रचक्षते। यदि स्यात्तर्पणादर्वाक् ब्रह्मयज्ञः कृतो न हि ॥ कृत्वा मनुष्य यज्ञं हि ततः स्वाध्याय मारभेत् ॥ अग्नेः पश्चिमतो देशे भूतयज्ञान्तरेऽथवा। कुशपूतैः समासीनं कुशपाणिः समाहितः ॥ श्रौताग्नौ लौकिके चापि जले भूम्या मथापि वा। वैश्वदेवश्च कर्त्तव्यो देवयज्ञः स संस्कृतः ॥ यदि स्याल्लौकिके पक्वं तदन्नं तत्र हूयते। शालाग्नौ तत्रचेदग्नौ विधिरेषः सनातनः ॥ देवेभ्यश्च हुतादन्नाच्छेषाद् भूत बलिं हरेत्। श्वभ्यश्च श्वपदेभ्यश्च पतितादिभ्यएव च ॥ दद्याद्भूमौ भूत बलिं क्रिमिभ्योऽथ द्विजोत्तमः। सायन्तनस्य सिद्धस्य पक्वमन्नं बलिं हरेत् ॥ वैश्वदेवं विनार्थेन सायम्प्रातर्विधीयते। एकन्तु भोजयेद्विप्रं पितृनुद्दिश्य यत्सदा ॥ नित्यश्राद्धं तदुद्दिष्टं पितृयज्ञो गतिप्रदः। उद्धृत्य वाथवाशक्तः किञ्चिदन्नं समाहितः ॥ वेदार्थ तत्त्व विदुषे द्विजायैवोपपादयेत्। पूजयेच्चासनं नित्यं नमस्येदर्चयेच्च तम् ॥ मनोवाक्कर्मभिः शान्तम् आगतं स्वगृहं गतम्। हन्तकार मथाग्रं वा भिक्षां वा शक्तितो

द्विजः॥ दद्यादतिथये नित्यं बुध्येत परमेश्वरम्। भिक्षामाकुर्यासमा
अग्रं तस्य चतुष्टयम्॥ पुष्कलं हन्तकारस्यात्तच्चतुर्गुणमुत्तमम्। गं
दोह कालमात्रं वै प्रतीक्ष्यं ह्यतिथिं स्वयम्॥ अभ्यागतान्यथाशा
भोजयेदतिथींसदा। अदत्त्वा देवताभूत भृत्यातिथि पितृष्वपि॥ भु
ञ्जीत चेत्समूढात्मा तिर्यग्योनिञ्च गच्छति। वेदाभ्यासोऽन्वहं शक्त्य
महायज्ञक्रियाक्रमाः॥ नाशयन्त्याशु पापानि वेदानामर्चनं तथा
यो मोहादथवा लोभादकृत्वा देवतार्चनम्॥ भुङ्क्ते स याति नरक
न् शूकरेष्वभिजायते। तस्मात्सर्व प्रयत्नेन कृत्वा कर्माणि वै शनैः।
भुञ्जीत स्वजनैः सार्धं स याति परमाङ्गतिम्। प्राङ्मुखोऽन्नानि भु
ञ्जीत सूर्याभिमुखएव वा॥ आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं द
क्षिणामुखः। श्रियं प्रत्यङ्मुखो भुङ्क्ते ऋणं भुङ्क्ते उदङ्मुखः।
आसीनस्त्वासनेशुद्धे भूम्यां पादौ निधाय च। उपवासेन तत्तुल्यं म
नुराह प्रजापतिः॥ पञ्चार्द्रो भोजनं कुर्य्यात् भूम्यां पादौ निधायच।
उपलिप्त शुचौ देशेपादौ प्रक्षाल्य वै करौ॥ आर्द्रवागाननो भूत्वा प-
ञ्चार्द्रो भोजनञ्चरेत्। महाव्याहृतिभिश्चान्नं परिधायोदकेन तु॥
अमृतोपस्तरणमसीत्यापोशनक्रियाञ्चरेत्। स्वाहा प्रणवसंयुक्तं
प्राणायान्नाहुतिं ततः॥ अपानाय ततोहुत्वा व्यानाय तदनन्तरम्।
उदानाय ततोहुत्वा समानायेति पञ्चमम्॥ विज्ञाय चार्थमेतेषां जुहु
यादात्मवान् द्विजः। शेषमन्नं यथाकामं भुञ्जीत व्यञ्जनैर्युतम्॥ ध्या
त्वा तन्मनसा देवमात्मानं वै प्रजापतिम्। अमृतापिधानमसीत्युप-
रिष्टाज्जलं पिबेत्॥ आचम्याङ्गुष्ठमात्रेण पादाङ्गुष्ठे तु दक्षिणे।
निधापयेद्धस्तजलं मूर्ध्वहस्तः समाहितः॥ हुत्वानुमन्त्रणं कुर्य्या-
च्छ्रद्धायामिति मन्त्रतः। अथाक्षरेण स्वात्मानं योजयेत् ब्रह्मणेति
हि॥ सर्वेषामेव योगानामात्मयोग परं स्मृतः। योगेन विधिना कुर्य्या
त् स याति ब्रह्मणः पदम्॥ यज्ञोपवीती भुञ्जीत सुगन्धालङ्कृतो-

तरम् । सायम्प्रातस्तु भुञ्जीत विशेषेण समाहितम् ॥ नाद्यात्सूर्य ग्रहात्पूर्व मह्नि सायं शशिग्रहात् । ग्रहकाले च नाश्नीयात् स्नात्वा श्नीयात्प्रमुक्तयोः ॥ अमुक्तयोरस्तगयोरद्याद्दृष्ट्वा परेऽहनि । नाश्नीयात्प्रेक्षमाणानां मप्रदायापि दुर्गतः ॥ न यज्ञशिष्टादन्यत्वात् कुलो मान्यो ममातुरः । आत्मार्थं भोजनं यस्य सुखार्थं यस्य मैथुनम् ॥ वृत्त्यर्थं यस्य चाधीतं निष्फलं तस्य जीवितम् । यो भुङ्क्ते वेष्टित शिरा यस्तु भुङ्क्ते विदिङ्मुखः ॥ सोपानत्कश्च यो भुङ्क्ते सर्वं विद्यात्तदासुरम् । नार्धरात्रे न मध्याह्ने नाजीर्णे नार्द्रवस्त्रधृक् ॥ न च भिन्नासनगतो न शयान स्थितोऽपि वा । नोपानत्पादुकी चापि न च संविलपन्नपि ॥ भुङ्क्ते च सुखमास्थाय तदन्नं परिणामयेत् । इतिहास पुराणाभ्यां वेदार्थ मुपबृंहयेत् ॥ ततः सन्ध्या मुपासीत पूर्वोक्त विधिना द्विजः । आसीनस्तु जपेद्देवीं गायत्रीं पश्चिमाम्प्रति ॥ नानुतिष्ठति यः पूर्वामुपास्ते न च पश्चिमाम् । स शूद्रेण समो लोके सर्वकर्म विगर्हितः ॥ हुत्वाग्नौ विधिवन्मन्त्रै भुक्त्वा यज्ञावशिष्टकम् । विसृज्य बान्धवजनं शयेच्छुष्कपदो निशि । नोत्तराभि मुखः सुप्यात् पश्चिमाभिमुखो न च ॥ अवाङ्मुखो न नग्नो वा न च भिन्नासने कचित् । न भग्नायास्तु खट्वायां शून्यागारे तथैव च ॥ इत्येव मखिलं प्रोक्तं अहन्यहनि वै पुरा । ब्राह्मणोक्तं कृत्यजातं अपवर्ग फलप्रदम् ॥ नास्तिक्यादथवालस्यात् ब्राह्मणो न करोति यः । स याति नरकान् घोरान् शूकरेष्वभि जायते ॥ नान्यो विमुक्तये पन्था मुक्त्वाश्रमधिकं स्वकम् । तस्मात्सर्वाणि भूतानि मुक्तये परमेष्ठिनः ॥ ॥ इति लघुव्यासस्मृतौ द्वितीयोऽध्यायः ।

लघुव्याससंहिता समाप्ता ।

---

## व्याससंहितायाम् ।

वाराणस्यां सुखासीनं वेदव्यासं तपोनिधिम् । पप्रच्छुर्मुन योऽभ्येत्य धर्म्मान् वर्णव्यवस्थितान् ॥ स स्पृष्टः स्मृतिमान् स्मृत्वा स्मृतिं वेदार्थगर्भिताम् । उवाचाथ प्रसन्नात्मा मुनयःश्रूयता मिति ॥ यत्र यत्र स्वभावेन कृष्णसारोमृगः सदा । चरते तत्र वेदोक्तो धर्मोभवितुमर्हति ॥ श्रुतिस्मृतिपुराणानां विरोधोयत्र दृश्यते । तत्र श्रौतं प्रमाणान्तु तयोर्द्वैधे स्मृतिर्वरा ॥ ब्राह्मणक्षत्रिय विशस्त्रयोवर्णाद्विजातयः । श्रुतिस्मृतिपुराणोक्तधर्मयोग्यास्तु नेतरे ॥ शूद्रोव र्णश्चतुर्थोऽपि वर्णत्वाद्धर्ममर्हति । वेदमन्त्रस्वधास्वाहावषट्कारादिभिर्विना ॥ विप्रवद्विप्रविन्नासु क्षत्रविन्नासु विप्रवत् । जातकर्म्माणि कुर्व्वीत ततः शूद्रासु शूद्रवत् ॥ वैश्यासु विप्रक्षत्राभ्यां ततः शूद्रासु शूद्रवत् । अधमादुत्तमायान्तु जातः शूद्राधमः स्मृतः ॥ ब्राह्मण्यां शूद्रजनितश्चण्डालोधर्मवर्जितः । कुमारीसम्भवस्त्वेकः सगोत्रायां द्वितीयकः ॥ ब्राह्मण्यां शूद्रजनितश्चाण्डालस्त्रिविधः स्मृतः । वर्द्धकीनापितोगोपआशापः कुम्भकारकः ॥ वणिक्किरातकायस्थमालाकार कुटुम्बिनः । वरटोमेदचण्डालदासश्वपचकोलकाः ॥ एतेऽन्त्यजाः समाख्याता येचान्येच गवाशनाः । एषां सम्भाषणात् स्नानं दर्शनादर्कवीक्षणम् ॥ गर्भाधानं पुंसवनं सीमन्तोजातकर्म च । नामक्रियानिष्क्रमणेऽन्नाशनं वपनक्रिया ॥ कर्णवेधोव्रतादेशो वेदारम्भक्रियाविधिः । केशान्तः स्नानमुद्वाहोविवाहाग्निपरिग्रहः ॥ त्रेताग्निसंग्रहश्चेति संस्काराः षोडश स्मृताः । नवैताः कर्णवेधान्ता मन्त्रवर्ज क्रियाः स्त्रियाः ॥ विवाहोमन्त्रतस्तस्याः शूद्रस्यामन्त्रतोदश । गर्भाधानं प्रथमतस्तृतीये मासि पुंसवः ॥ सीमन्तश्चाष्टमे मासि जाते जातक्रिया भवेत् । एकादशेऽह्नि नामार्कस्येक्षा मा

